समाप्तात्रेयं स्कन्दमहापुराणान्तर्गतद्वितीयवैष्णवखण्डस्यविषयानुक्रमणिका

इतिविद्वज्जनकृपाभिलाषिणौ लक्ष्मणदुर्गाभिजन ( लक्ष्मणगढ-सीकर निवासि ) ब्रह्मदत्तत्रिवेदि—नवलदुर्गवास्तव्य ( नवलगढ़-जयपुर निवासि ) रामनाथदाधीचौ ।

——*:०:*——

शुभमस्तु सताम् ॥

॥ श्रीगणेशायनमः ॥

॥ ॐ नमो भगवते वासुदेवाय ॥

श्रीमन्महर्षिवेदव्यासप्रणीतम्

# स्कन्दपुराणम्

## तस्येदं द्वितीयंवैष्णवखण्डम्प्रारभ्यते

### प्रथमोऽध्यायः

### तत्राऽऽदौवेङ्कटाचलमाहात्म्यम्

नारदस्यसुमेरुशिखरस्थयज्ञवराहदर्शनम्

व्यास उवाच

पावनेनैमिषारण्ये शौनकाद्या महर्षयः । चक्रिरे लोकरक्षार्थं सत्रं द्वादशवार्षिकम् ॥१॥

तानभ्यगच्छत्कथको व्यासशिष्यो महामतिः ।

मुनिरुग्रश्रवा नाम रोमहर्षणसम्भवः ॥ २ ॥

सम्यगभ्यर्चितस्तेषांसूतः पौराणिकोत्तमः । कथयामास तद्दिव्यंपुराणंस्कन्दनामकम् सृष्टिसंहारवंशानांवंशानुचरितस्य च । कथांमन्वन्तराणां च विस्तरात्स न्यवेदयत् कथास्तीर्थप्रभावाणां श्रुत्वा ते मुनिपुङ्गवाः । ऊचिरे वशिनंसूतंकथाश्रवणकाङ्क्षया

### ऋषय ऊचुः

रोमहर्षण सर्वज्ञ पुराणार्थविशारद !। माहात्म्यंश्रोतुमिच्छामोगिरीन्द्राणां महीतले
ब्रूहि त्वं नो महाभाग ! के प्रधाना महीधराः ।

### श्रीसूत उवाच

एतमेव पुरा प्रश्नमपृच्छं जाह्नवीतटे । व्यासं मुनिवरश्रेष्ठं सोऽब्रवीन्मे गुरूत्तमः ॥ ७॥

### व्यास उवाच

पुरा देवयुगे सूत नारदो मुनिसत्तमः । सुमेरुशिखरं गत्वा नानारत्नसुशोभितम् ॥
तन्मध्येविपुलं दीप्तं ब्रह्मणो दिव्यमालयम् । दृष्ट्वा तस्योत्तरे देशे पिप्पलद्रुममुत्तमम्
सहस्रयोजनोच्छ्रायं विस्तीर्णं द्विगुणंतथा । तन्मूलेमण्डपंदिव्यंनानारत्नसमन्वितम्
पद्मरागमणिस्तम्भैःसहस्रैःसमलंकृतम् । वैडूर्यमुक्तामणिभिःकृतस्वस्तिकमालिकम्
नवरत्नसमाकीर्णं दिव्यतोरणशोभितम् । मृगपक्षिभिराकीर्णं नवरत्नमयैः शुभैः ॥१२
पुष्परागमहाद्वारं सप्तभूमिकगोपुरम् । सन्दीप्तवज्रसुकृतकवाटद्वयशोभितम् ॥ १३॥
प्रविश्याऽसौ ददर्शान्तर्दिव्यमौक्तिकमण्डपम् । वैडूर्यवेदिकं तुङ्गमारुरोह महामुनिः॥
तन्मध्ये तुङ्गमतुलं वसुपादविराजितम् । ददर्श मुक्तासङ्कीर्णं सिंहासनं महाद्युति ॥
तन्मध्ये पुष्करंदिव्यंसहस्रदलशोभितम् । श्वेतंचन्द्रसहस्राभंकर्णिकाकेसरोज्ज्वलम्
तस्य मध्ये समासीनं पूर्णचन्द्रायुतप्रभम् । कैलासपर्वताकारं सुन्दरं पुरुषाकृतिम्
चतुर्बाहुमुदाराङ्गं वराहवदनं शुभम् । शङ्खचक्राभयवरान्बिभ्राणं पुरुषोत्तमम् ॥ १८ ॥
पीताम्बरधरं देवं पुंडरीकायतेक्षणम् । पूर्णेन्दुसौम्यवदनं धूपगन्धिमुखाम्बुजम् १९
सामध्वनिं यज्ञमूर्तिं स्रुक्तुण्डं स्रुवनासिकम् ।
क्षीरसागरसङ्काशं किरीटोज्ज्वलिताननम् ॥ २० ॥
श्रीवत्सवक्षसं शुभ्रयज्ञसूत्रविराजितम् । कौस्तुभश्रीसमुद्द्योतं समुन्नतमहोरसम्
जाम्बूनदमयैर्दिव्यैः सुरत्नाभरणैर्युतम् । विद्युन्मालापरिक्षिप्तशरन्मेघमिवोज्ज्वलम् ॥
वामपादतलाक्रान्तपादपीठविराजितम् । कटकाङ्गदकेयूरकुण्डलोज्ज्वलितं सदा ॥
चतुर्मुखवसिष्ठात्रिमार्कण्डेयैर्मुनीश्वरैः । भृग्वादिभिरनेकैश्च सेव्यमानमहर्निशम् ॥



इन्द्रादिलोकपालैश्च गन्धर्वाप्सरसां गणैः । सेवितं देवदेवेशं प्रणिपत्याऽभिगम्य च
दिव्यैरुपनिषद्भागैरभिष्टूय धराधरम् । नारदः परमप्रीतः स्थितो देवस्य सन्निधौ ॥
एतस्मिन्नन्तरेचाभूद्दिव्यदुन्दुभिनिःस्वनः ॥ २७ ॥
ततस्समागता देवी धरणी सखिसंयुता । सरत्नसागराकारदिव्याम्बरसमुज्ज्वला॥
सुमेरुमन्दराकारस्तनभारावनामिता । नवदूर्वादलश्यामा सर्वाभरणभूषिता ॥ २९ ॥
इलया वै पिङ्गलया सखीभ्यां च समन्विता ।
ततस्ताभ्यां समानीतं पुष्पाणां निचयं मही ॥ ३० ॥
श्रीमद्वराहदेवस्य पादमूले विकीर्य च । प्रणम्य देवदेवेशं कृताञ्जलिपुटा स्थिता ॥३१
तां देवीं श्रीवराहोऽपि ह्यालिङ्ग्याऽङ्के निधाय च ॥ ३२ ॥
पप्रच्छ कुशलं पृथ्वीं प्रीतिप्रवणमानसः ॥ ३३ ॥

### श्रीवराह उवाच

त्वां निवेश्यमहादेवि! शेषशीर्षेसुखावहे । लोकंत्वयिनिवेश्यैवत्वत्सहायान्धराधरान्
इहाऽऽगतोऽस्म्यहं देवि ! किमर्थं त्वमिहाऽऽगता ॥ ३४ ॥

### पृथिव्युवाच

मां समुद्धृत्य पातालात्सहस्रफणशोभिते । रत्नपीठ इवोत्तुङ्गे सरत्नेऽनन्तमूर्धनि ॥
कृत्वा मां सुस्थिरां देव ! भूधरान्संनिवेश्य च ॥ ३५ ॥
मद्धारणक्षमान्पुण्यांस्त्वन्मयान्पुरुषोत्तम । तेषु मुख्यान्महाबाहो मदाधारान्वदस्व मे

### श्रीवराह उवाच

सुमेरुर्हिमवान्विन्ध्योमन्दरो गन्धमादनः । सालग्रामश्चित्रकूटो माल्यवान्पारियात्रकः
महेन्द्रो मलयःसह्यः सिंहाद्रिरपि रैवतः । मेरुपुत्रोऽञ्जनो नाम शैलः स्वर्णमयो महान्
एते शैलवराः सर्वे त्वदाधारा वसुन्धरे । ये मया देवसङ्घैश्च ऋषिसङ्घैश्च सेविताः ॥
एतेषु प्रवरान्वक्ष्ये तत्त्वतः शृणु माधवि !। सालग्रामश्चसिंहाद्रिश्शैलेन्द्रोगन्धमादनः
एते शैलवरा देवि दिशं हैमवतीं श्रिताः । दक्षिणस्यां प्रतीतांस्तुवक्ष्येशैलान्वसुन्धरे
अरुणाद्रिर्हस्तिशैलो गृध्राद्रिर्घटिकाचलः । एते शैलवराः सर्वे क्षीरनद्यास्समीपगाः

हस्तिशैलादुत्तरतः पञ्चयोजनमात्रतः । सुवर्णमुखरीनाम नदीनाम्प्रवरा नदी ॥४३॥
तस्या एवोत्तरे तीरे कमलाख्यं सरोवरम् । तत्तीरे भगवानास्ते शुकस्य वरदो हरि
बलभद्रेण संयुक्तः कृष्णोभक्तार्तिनाशनः । वैखानसैर्मुनिगणैर्नित्यमाराधितोऽमलैः
कमलाख्यस्य सरस उत्तरे काननोत्तमे । क्रोशद्वयार्धमात्रे तु हरिचन्दनशोभिते ॥
श्रीवेङ्कटाचलो नाम वासुदेवालयो महान् ॥ ४६ ॥
सप्तयोजनविस्तीर्णः शैलेन्द्रोयोजनोच्छ्रितः । अस्तिस्वर्णमयोदेविरत्नसानुभृदायतः
इन्द्राद्या दैवतगणा वसिष्ठाद्यामुनीश्वराः । सिद्धाः साध्याश्चमरुतोदानवादैत्यराक्षसाः
रम्भाद्या अप्सरःसङ्घा वसन्ति नियतं धरे !॥ ४८ ॥
तपश्चरन्ति नागाश्च गरुडाः किन्नरास्तथा ।
एतैरधिष्ठितास्तत्रसरितःपुण्यदर्शनाः । सरांसिविविधान्यत्रसन्ति दिव्यानिमाधवि
तीर्थानाञ्चैव सर्वेषां शृणुष्व प्रवराणि वै ॥ ५० ॥
चक्रतीर्थन्दैवतीर्थं वियद्गङ्गा तथैव च । कुमारधारिका तीर्थम्पापनाशनमेव च ॥
पाण्डवं नामतीर्थञ्च स्वामिपुष्करिणी तथा ॥ ५१ ॥
सप्तैतानि वराण्याहुर्नारायणगिरौ शुभे । एतेषु प्रवरा देवि स्वामिपुष्करिणी शुभा
अस्यास्तु पश्चिमे तीरे निवसामि त्वया सह ।
आस्तेऽस्या दक्षिणे तीरे श्रीनिवासो जगत्पतिः ॥ ५३ ॥
गङ्गाद्यैःसकलैस्तीर्थैःसमासासागराम्बरे । त्रैलोक्येयानितीर्थानिसरांसिसरितस्तथा
तेषां स्वामित्वमापन्नं धरे ! स्वामिसरोवरे ॥ ५४ ॥
स्वामिपुष्करिणींपुण्यांसेवितुंदिव्यभूधरे । वसन्तिसर्वतीर्थानितेषांसंख्यांवदामिते
षट्षष्टिकोटितीर्थानि पुण्येऽस्मिन्भूधरोत्तमे ।
तेषु चात्यन्तमुख्यानि षट् तीर्थानि वसुन्धरे !॥ ५६ ॥
पञ्चानां तीर्थराजानां तुम्बोगर्भसमोमहान् । गर्भवासभयध्वंसी स्नातानाम्भूधरोत्तमे

धरण्युवाच

षट्तीर्थानिमहाबाहो! त्वयोक्तानि महीधरे । माहात्म्यंवदतेषांमे यथाकालंयथाविधि



फलानि तेषु स्नातानां नराणाम्वद भूधर !॥ ५८ ॥

श्रीवराह उवाच

नारायणाद्रिमाहात्म्यं वदामि शृणु माधवि । देवाश्चऋषयश्चैव योगिनः सनकादयः
कृतेऽञ्जनाद्रिं त्रेतायां नारायणगिरिं तथा ॥ ६० ॥
द्वापरे सिंहशैलञ्च कलौ श्रीवेङ्कटाचलम् । प्रवदन्तीह विद्वांसः परमात्मालयंगिरिम्
योजनानां सहस्रान्ते द्वीपान्तरगतोऽपि वा । यो नमेद्भूधरेन्द्रंतद्दिशमुद्दिश्यभक्तितः
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ ६२ ॥
तस्मिन्षट्तीर्थमाहात्म्यं यथाकालम्वदामि ते ॥ ६३ ॥
शृणुष्वावहिताभद्रेसर्वपापप्रणाशनम् । कुम्भसंस्थरवौमाघे पौर्णमास्याम्महातिथौ
मघानक्षत्रयुक्तायां भूधरेन्द्रे वसुन्धरे । कुमारधारिकानाम सरसी लोकपावनी ॥६५॥
यत्रास्तेपार्वतीसूनुःकार्तिकेयोऽग्निसम्भवः । देवसेनासमायुक्तःश्रीनिवासार्चकोऽमले
तस्यां यः स्नातिमध्याह्नेतस्यपुण्यफलंशृणु । गङ्गादिसर्वतीर्थेषु यः स्नातिनियमाद्धरे
द्वादशाब्दं जगद्धात्रि ! तत्फलं समवाप्नुयात् ।
योऽन्नं ददाति तत्तीर्थे शक्तया दक्षिणयान्वितम् ।
स तावत्फलमाप्नोति स्नाने तूक्तं फलं यथा ॥ ६८ ॥
मीनसंस्थे सवितरि पौर्णमासीतिथौ धरे । उत्तराफाल्गुनी युक्ते चतुर्थे कालउत्तमे
पञ्चानामपि तीर्थानां तुम्बेऽथ गिरिगह्वरे । यः स्नाति मनुजो देवि पुनर्गर्भे न जायते
अग्निवाहस्थितो भानौ चित्रानक्षत्रसंयुते । पूर्णिमाख्येतिथौपुण्ये प्रातःकालेतथैवच
आकाशगङ्गासरितिस्नातो मोक्षवाप्नुयात् ॥ ७२ ॥
वृषभस्थे रवौ राधे द्वादश्यांरविवासरे । शुक्लेवाप्यऽथवा कृष्णे पक्षेभौमसमन्विते
शुक्ले वाप्यथवा कृष्णे भानुवारेण संयुते । पुष्यनक्षत्रसंयुक्ते हस्तर्क्षेण युतेऽपिवा
तीर्थे पाण्डवनाम्न्यत्र सद्भवे स्नाति यो नरः । नेहदुःखमवाप्नोति परत्र सुखमश्नुते ॥
शुक्ले पक्षेऽथवा कृष्णे याऽर्कवारेण सप्तमी । पुष्यनक्षत्रसंयुक्ताहस्तर्क्षेणयुतापिवा
तस्यां तिथौ महाभागे पापनाशनसंज्ञके । तीर्थेयःस्नाति नियमाद्भूधरेन्द्रस्य मस्तके

कोटिजन्मार्जितैः पापैर्मुच्यते स नरोत्तमः ॥ ७७ ॥
शृणु देवि परब्रह्ममनन्ताख्ये महागिरौ । मद्दिव्यालयवायव्ये शिखरे गिरिगह्वरे ॥
देवतीर्थमितिख्यातं तटाकमतिशोभनम् ॥ ७८ ॥
तस्मिन्पुण्यतमे देवि ! स्नानकालम्वदामि ते ॥ ७९ ॥
गुरुपुष्ये व्यतीपाते सोमश्रवणके तथा । दिनेष्वेतेषु यः स्नाति तस्यपुण्यफलं शृणु
यानि कानीह पापानिज्ञानाज्ञानकृतानिच । तानि सर्वाणिनश्यन्ति देवतीर्थेऽतिपावने
पुण्यान्यपि च वर्धन्ते देवतीर्थनिमज्जनात् । दीर्घमायुरवाप्नोति पुत्रपौत्रसमन्वितः ॥
अन्ते स्वर्गं समासाद्य चन्द्रलोके महीयते ॥ ८२ ॥
तद्दिनेष्वन्नदो देवि यावज्जीवान्नदो भवेत् । अतिगुह्यतमं देवि प्रोक्तन्तुभ्यं वसुन्धरे

व्यास उवाच

श्रुत्वाऽथ पृथिवी देवी प्रीतिप्रवणमानसा । इष्टाभिर्वाग्भिरतुलं तुष्टाव धरणीधरम्

धरण्युवाच

नमस्ते देवदेवेश! वराहवदनाऽच्युत । क्षीरसागरसङ्काश वज्रशृङ्ग! महाभुज !॥८५॥
उद्धृताऽस्मि त्वया देव !कल्पादौ सागराम्भसः ।
सहस्रबाहुना विष्णो ! धारयामि जगन्त्यहम् ॥ ८६ ॥
अनेकदिव्याभरणयज्ञसूत्रविराजित !। अरुणारुणाम्बरधर दिव्यरत्नविभूषित ॥८७॥
उद्यद्भानुप्रतीकाश पादपद्म नमोनमः । बालचन्द्राभ दंष्ट्राग्रमहाबल पराक्रम !॥८८॥
दिव्यचन्दनलिप्ताङ्ग ! तप्तकाञ्चनकुण्डल !। इन्द्रनीलमणिद्योति हेमाङ्गदविभूषित !॥
वज्रदंष्ट्राग्रनिर्भिन्न हिरण्याक्ष महाबल । पुण्डरीकाभिरामाक्ष! सामस्वनमनोहर ॥
श्रुतिसीमन्त भूषात्मन्सर्वात्मंश्चारुविक्रम !। चतुराननशम्भुभ्यां वन्दिताऽऽयतलोचन
सर्वविद्यामयाकार शब्दातीत नमो नमः । आनन्दविग्रहाऽनन्त कालकाल नमोनमः
इति स्तुत्वाऽचला देवी ववन्दे पादयोर्विभुम् ।
वन्दमानां समुद्वीक्ष्य देवः फुल्लविलोचनः ॥ ९३ ॥
उद्धृत्य धरणीं देवीमालिलिङ्गेऽथबाहुभिः । आघ्रायधरणीवक्त्रंवामाङ्केसन्निवेश्यच



आरुह्य गरुडेशानं जगाम वृषभाचलम् । मुनीन्द्रैर्नारदाद्यैश्च स्तूयमानो महीपतिः ॥
स्वामिपुष्करिणीतीरे पश्चिमे लोकपूजिते । आस्ते वराहवदनोमुनीन्द्रैस्तत्रपूजितः
वैखानसैर्महाभागैर्ब्रह्मतुल्यैर्महात्मभिः ॥ ९६ ॥

व्यास उवाच

तं दृष्ट्वा नारदः सूत! मुनीनामुक्तवान्पुरा । तदेतदहमश्रौषं तत्र वै मुनिसंसदि ॥ ९७॥
यत्पृष्टोऽहं त्वयासूतमाहात्म्यंधरणीभृताम् । मया तूक्तं यथाबुद्धि नारदाच्चपुराश्रुतम्
य इदं धर्मसम्वादमावयोः सूत! पावनम् । पठेद्वा देवपुरतो ब्राह्मणानां पुरस्तथा ॥
सर्वपापविवर्णानांशृण्वतांभक्तिपूर्वकम् । स प्रतिष्ठामवाप्नोति पुत्रपौत्रैःसमन्वितः
शृण्वतामपि सर्वेषां यदिष्टं तद्भविष्यति ॥ १०१ ॥

सूत उवाच

इति मे भगवान्व्यासःप्रोवाच मुनिसेवितः । यथाश्रुतं मया पूर्वं कृष्णद्वैपायनाद्गुरोः
तत्तथासर्वमेवाऽऽत्र मयाप्युक्तंमुनीश्वराः । श्रुत्वासूतवचस्त्वित्थंते प्रीतमनसोऽभवन्

ऋषय ऊचुः

सूत ! त्वयोक्तं भुवि पर्वतेषु पुण्येषु पुण्यस्य महीधरस्य ।
माहात्म्यमस्माकमहीन्द्रनाम्नः पापापहं मोक्षफलप्रदायकम् ॥ १०४ ॥
ततो वृषाद्रिं सम्प्राप्य वराहोधरणीयुतः । किमुक्तवान्धरण्यै स तन्नो ब्रूहि महामते
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यांसंहितायां द्वितीये वैष्णवखण्डे
श्रीवेङ्कटाचलमाहात्म्येधरणीवराहसम्वादे नारदस्य सुमेरुशिखरस्थ-
यज्ञवराहदर्शनप्राप्त्यादिवर्णनं नाम प्रथमोऽध्यायः ॥१॥

---

# द्वितीयोऽध्यायः

## श्रीवाराहमन्त्राराधनविधिवर्णनम्

श्रीसूत उवाच

शृणुध्वं मुनयः सर्वे कथामुण्यां पुरातनीम् । वैवस्वतेऽन्तरे पूर्वं कृते पुण्यतमे युगे
नारायणाद्रौ देवेशं निवसन्तं क्षमापतिम् । वाराहरूपिणं देवं धरणी सखिभिर्वृता
प्रणम्य परिपप्रच्छ रक्तपद्मायतेक्षणम् ॥ ३ ॥

धरण्युवाच

आराध्यःकेन मन्त्रेणभवान्प्रीतोभविष्यति । तं मे वद त्वं देवेश यःप्रियो भवतःसदा
जपतां सर्वसम्पत्तिकारकं पुत्रपौत्रदम् । सार्वभौमत्वदश्चैव कामिनां कामदं सदा ॥
अन्ते यस्त्वत्पदप्राप्तिं ददाति नियमात्मनाम् । एवम्भूतं वद प्रीत्यामयिवाराहमानद

श्रीसूत उवाच

इति पृष्टस्तया भूम्या प्राह प्रीतिस्मिताननः ।

श्रीवराह उवाच

शृणु देवि परं गुह्यं सद्यः सम्पत्तिकारकम् । भूमिदं पुत्रदं गोप्यमप्रकाश्यंकदाचन ॥
किं च शुश्रूषवे वाच्यं भक्ताय नियतात्मने ॥ ६ ॥
ॐ नमः श्रीवराहाय धरण्युद्धरणाय च । वह्निजायासमायुक्तः सदाजप्योमुमुक्षुभिः
अयं मन्त्रो धरादेवि सर्वसिद्धिप्रदायकः । ऋषिः सङ्कर्षणः प्रोक्तोदेवता त्वहमेव हि
छन्दः पङ्क्तिः समाख्याता श्रींबीजं समुदाहृतम् ।
चतुर्लक्षं जपेन्मन्त्रं सद्गुरोर्लब्धतन्मनुः ॥ १२ ॥
जुहुयात्पायसान्नम्वैक्षौद्रसर्पिःसमन्वितम् । अथध्यानम्प्रवक्ष्यामिमनःशुद्धिप्रदायकम्
शुद्धस्फटिकशैलाभं रक्तपद्मदलेक्षणम् । वराहवदनं सौम्यश्चतुर्बाहुं किरीटिनम् ॥
श्रीवत्सवक्षसं चक्रशङ्खाभयकराम्बुजम् । वामोरुस्थितयायुक्तं त्वया मां सागराम्बरे



रक्तपीताम्बरधरं रक्ताभरणभूषितम् । श्रीकूर्मपृष्ठमध्यस्थशेषमूर्त्यब्जसंस्थितम् ॥
एवं ध्यात्वा जपेन्मन्त्रं सदा चाऽष्टोत्तरं शतम् ।
सर्वान्कामानवाप्नोति मोक्षञ्चाऽन्ते व्रजेद् ध्रुवम् ॥ १७ ॥
प्रोक्तंमया ते धरणियत्पृष्टोऽहंत्वयाऽमले । अतः किन्ते व्यवसितम्ब्रूहि तद्विमलानने

श्रीसूत उवाच

एतच्छ्रुत्वा ततो भूमिः पप्रच्छपुनरेवतम् । केनवाऽनुष्ठितन्देव पुराप्राप्तम्फलञ्च किम्
इति पृष्टः पुनर्देवः श्रीवराहोऽब्रवीदिदम् । पुरा कृतयुगे देवि धर्मोनाम मनुर्महान् ॥
ब्रह्मणोऽमुं मनुं लब्ध्वा जप्त्वाऽस्मिन्धरणीधरे ।
माञ्च दृष्ट्वा वरं लब्ध्वा प्राप्तोऽभून्मामकम्पदम् ॥ २१ ॥
इन्द्रोदुर्वाससःशापात्पुराभ्रष्टस्त्रिविष्टपात् । अनेनेष्ट्वाऽत्र मां देवि पुनःप्राप्तस्त्रिविष्टपम्
अन्येऽपि मुनयो भूमे! जप्त्वा प्राप्ताः पराङ्गतिम् ।
अनन्तः पन्नगाधीशो ह्यमुं लब्ध्वाऽथ कश्यपात् ॥ २३ ॥
श्वेतद्वीपे जपित्वैव बभूव धरणीधरः । तस्माज्जप्यः सदा चेह मनुष्यैश्च धरार्थिभिः

श्रीसूत उवाच

एतच्छ्रुत्वाऽथ सुप्रीता पुनः प्राह धराधरम् ॥ २५ ॥

धरण्युवाच

वेङ्कटाख्येमहाशैले श्रीनिवासोजगत्पतिः । कदाह्यायातिदेवेश श्रीभूमिसहितोऽमलः
कथं कल्पान्तरस्थायी भविष्यति जनार्दनः । एतद्ब्रूहि वराहात्मन्महत्कौतूहलं मम

इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे
श्रीवेङ्कटाचलमाहात्म्ये धरणीवराहसम्वादे श्रीवराहमन्त्राराधनविध्यादि
वर्णनं नाम द्वितीयोऽध्यायः ॥ २ ॥

---

# तृतीयोऽध्यायः

## अगस्त्यप्रार्थनयाभगवतःसर्वजनदृग्गोचरत्ववर्णनम्

श्रीवराह उवाच

हन्त ते कथयिष्यामि पुरावृत्तं वरानने !। शृणु पुण्यं महादेवि सभविष्यं सहोत्तरम्
वैवस्वतेऽन्तरे देवि! पूर्वे कृतयुगेऽन्तरे । वायोस्तपो महद् दृष्ट्वा श्रीभूमिसहितोऽनघः

आगच्छच्छ्रीनिवासश्च स्वामिपुष्करिणीतटे ॥ २ ॥
दक्षिणेऽस्मिन्पुण्यतम आनन्दाख्यविमानके ।
वसिष्यति च श्रीकान्तो वायोः प्रियकरो हरिः ॥ ३ ॥
तदारभ्य हृषीकेशः सेनान्याराधितोऽनिशम् ।
आकल्पान्तमदृश्योऽस्मिन्विमानेऽसौ वसिष्यति ॥ ४ ॥

धरण्युवाच

अदृश्यो भगवान्मर्त्यैः कथं दृश्यो भविष्यति ॥ ५ ॥

श्रीनिवासोऽपि देवेशो भवद्दक्षिणपार्श्वगः । एतद्वद सुराधीश! जनैराराध्यते कथम्

श्रीवराह उवाच

अगस्त्योऽस्मिन्समासाद्यदृष्ट्वादेवंसनातनम् । आराध्यद्वादशाब्दंतंप्रीणयित्वापुनःपुनः
ययाचे तत्र सान्निध्यंभवान्दृश्योभवत्विति । एवमुक्तोहृषीकेशः श्रीभूमिसहितो धरे

श्रीभगवानुवाच

अहं दृश्यो भविष्यामित्वत्कृते सर्वदेहिनाम् । एतद्विमानंदेवर्षे न दृश्यं स्यात्कदाचन

आकल्पान्तं मुनीन्द्राऽस्मिन्दृश्योऽहं नाऽत्र संशयः ।
मुनिस्तद्वचनं श्रुत्वा प्रीतः प्रायात्स्वमाश्रमम् ॥ १० ॥
ततश्चतुर्भुजो देवः स दृश्योऽभून्नरादिभिः ।
विमाने मुनिचिन्त्येऽस्मिन्नासिता च तथोत्तरम् ॥ ११ ॥



आराध्यमानः स्कन्देन वायुना सेवितः सदा । एवं गते महाकाले चतुर्युगसमन्विते
अष्टाविंशे तु सञ्जाते द्वापरान्ते वसुन्धरे । युद्धे च भारतेऽतीते तिष्ये सतियुगे तथा
विक्रमार्कादयो भूपाःशकाः शूद्रादयस्तथा । गमिष्यन्तिस्वर्गलोकं मामज्ञात्वावरानने
ततः सोमकुलोद्भूतो मित्रवर्मा महारथः । तुण्डीरमण्डले राजा नारायणपुरे वसन्
भविष्यति वरारोहेमहाभाग्योदयो महान् । तस्मिञ्छासतिभूलोकं धर्मेणपृथिवीपतौ
अकृष्टपच्या पृथिवी सर्वसस्यविभूषणा । निरीतिकोऽभवत्सर्वो जनोधर्मसमन्वितः

तस्य पत्नी समभवत्पाण्ड्यकन्यामनोरमा ।
तस्य जज्ञे कुलोत्तंसो वियन्नामासुतोऽस्यवै ॥ १८ ॥

तस्य पत्नीतुधरणीनाम्नासीच्छकवंशजा । तस्मिन्राज्यंविनिक्षिप्यमित्रवर्मानृपोत्तमः

ययौ तपोवनं पुण्यं वेङ्कटाद्रेः समीपतः ॥ २० ॥

आकाशनामा तु महान्राजाऽभूत्सार्वभौमकः । एकदारव्रतो राजाधरणीसक्तचेतनः २१
यज्ञार्थं शोधयामास भुवमारणितीरतः । काञ्चनेन हलेनैव कृष्यमाणे धरातले ॥२२॥
बीजमुष्टिं विकिरता दृष्टा कन्या धरोद्गता । पद्मशय्यागता रम्या सर्वलक्षणलक्षिता
तप्तजाम्बूनदमयी पुत्रिकेव विराजती । तां दृष्ट्वा स महीपालो विस्मयोत्फुल्ललोचनः
आदाय तनयाचेयं ममैवेति पुनःपुनः । जहर्ष मन्त्रिभिश्चैनं प्राह वागशरीरिणी ॥२५
सत्यं तवैव तनया वर्धयस्व सुलोचनाम् । ततः प्रीतमना राजा स्वपुरं प्रविवेश ह
आहूय धरणीं देवीमिदमाह महीपतिः । देवदत्तामिमां पश्य भूतलादुत्थितां मम

आवाभ्यां तदपुत्राभ्यां पुत्रीयं भविता ध्रुवम् ।
इत्युक्त्वा प्रददौ देव्या हस्ते प्रीत्या वियन्नृपः ॥ २८ ॥

तस्यांगृहं प्रविष्टायांधरणीगर्भमादधौ । वियन्नृपश्चसुप्रीतोवीक्ष्यस्निग्धविलोचनाम्

उवाच फलिता सुभ्रूलता सान्तानिकी च मे । ॥ ३० ॥

अथ सा धरणी देवी काले कमललोचना । सुप्रशस्ते मुहूर्ते च स्वोच्चसंस्थेषु पञ्चसु

ग्रहेषु सुषुवे पुत्रं मेषस्थे च दिवाकरे ॥ ३१ ॥

देवदुन्दुभयो नेदुःपुष्पवृष्टिर्गृहेऽपतत् । ववौ वायुः सुखस्पर्शस्तज्जन्मदिवसे तदा

पुत्रसूतिप्रवक्तृणां सुप्रीतः पुत्रजन्मनि । सर्वस्वदानमकरोच्छत्रचामरवर्जितम् ॥
कपिलाकोटिदानंचऋषभणां शताधिकम् । दिवसेद्वादशे पुण्येजातकर्मादिकाःक्रियाः
चकार नामधेयं च वसुदान इति स्वयम् ॥३४ ॥

श्रीवराह उवाच

आकाशतनयो देवि वसुदानो मनोरमः । ववृधे दिवसैर्बालः शुक्लपक्ष इवोडुराट् ॥
उपनीतोविनीतोऽसौगुरुभिर्ब्रह्मपारगैः । पितुरस्त्राणिशस्त्राणिमन्त्रवत्सोऽप्यशिक्षत
चतुष्पादं धनुर्वेदं साङ्गोपाङ्गमधीतवान् । पिता तेनाऽतिबलिना दुराधर्षः परैरभूत्
आकाश इव निष्पङ्को ग्रीष्मेभानुमता युतः । वैशाख इव मध्याह्ने दुःसहोदुर्निरीक्षकः
इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे
श्रीवेङ्कटाचलमाहात्म्ये धरणीवराहसम्वादेऽगस्त्यप्रार्थनयाभगवतः
सर्वजनदृग्गोचरत्वादिवर्णनंनाम तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः

### उद्यानवासिन्याःपद्मावत्याःसमीपेनारदागमनम्

धरण्युवाच

उक्तं भगवता तस्य वियत्पुत्रस्य नाम च ।
अयोनिजायास्तत्पुत्र्याः किं नाम च तदाऽकरोत् ॥१ ॥

श्रीसूत उवाच

इति पृष्टः पुनः प्राह श्रीवराहो जगत्पतिः ॥ २ ॥

श्रीवराह उवाच

आकाशराजो मतिमांस्तां दृष्ट्वा कमलेक्षणाम् ॥ ३ ॥
पद्मिनीति च नाम्ना वै चकार वसुधासुताम् ।



तां तु यौवनसम्पन्नां सखीभिःपरिवारिताम् ॥ ४ ॥
आरामे विहरन्तीं च शुककोकिलानादिते । यदृच्छयाऽऽगतस्तत्रनारदो मुनिसत्तमः
वनलक्ष्मीमिवाऽऽलोक्य विस्मयादिदमब्रवीत् ॥ ६ ॥

नारद उवाच

काऽसि कस्य सुता भीरु ! हस्तं दर्शय मे तव ।
इत्युक्ता सा सुचार्वङ्गी स्वात्मानं मुनयेऽब्रवीत् ॥ ७ ॥
वियद्राजसुता ब्रह्मँल्लक्षणानि वदस्व मे । इत्युक्तः स तदा प्राह नारदो मुनिसत्तमः

नारद उवाच

शृणु त्वं चारुवदने! लक्षणानि वदामि ते । पादौ प्रतिष्ठितौ सुभ्रुरक्तपद्मदलान्वितौ
पादाङ्गुल्यः समा रक्ता रक्ततुङ्गनखान्विताः । गुल्फौ गूढौ समावेतौजङ्घेचारोमशेशुभे
जानुनीसमसुस्निग्धे समावूरू क्रमादुरू । नितम्बौ पृथुलौ पीनौ जघनंचिन्त्यमेव हि
नाभिर्मण्डलवान्निम्नःपार्श्वौते मेदुरावुभौ । त्रिम्वलीललितंमध्यंरोमराजिविराजितम्
स्तनौ पीनौ घनौ स्निग्धावुन्नतौ मग्नचूचुकौ । करौतेरक्तपद्माभौपद्मरेखासमन्वितौ
सुसूक्ष्मौ रक्तसत्पर्व निरन्तरसमाङ्गुली ॥ १३ ॥
शुकतुण्डसमाकारनखपङ्क्तिविराजितौ । दीर्घौच कोमलौ भद्रे भुजौतेपुष्पदण्डवत्
पृष्टं ते वेदिवद्भाति विलग्नमृजु मध्यमम् । कण्ठस्तु रक्तोदीर्घश्चस्कन्धौचावनतौशुभे
मुखं प्रसन्नं सततमकलङ्कशशिप्रभम् । कपोलौ कनकादर्शसदृशौकुण्डलोज्ज्वलौ॥
तिलपुष्पसमाकारा नासिका ते शुभानने । अकलङ्काष्टमीचन्द्रसदृशोऽतिमनोहरः ॥
दृश्यतेऽयं ललाटस्ते नीलालकसुशोभितः । मूर्धा तेसमवृत्तश्चस्निग्धायतकचान्वितः
स्मितसंशोभिदशनं बिम्बाधरसमन्वितम् ।
मुखं ते विष्णुयोग्यं स्यादिति मे निश्चिता मतिः ॥ १९ ॥
नाभिस्ते दक्षिणावर्त आवर्तइवगाङ्गजः । त्वंहिक्षीराब्धिसम्भूतालक्ष्मीरिवहिदृश्यसे

श्रीवाराह उवाच

इत्युक्त्वा पूजितस्ताभिर्नारदोऽन्तर्दधे तदा ।

एतच्छ्रुत्वाऽथ तत्सख्यस्तामूचुः पद्मिनीं सखीम् ॥ २१ ॥
वनं गच्छाम? पुष्पार्थं वसन्तःसमुपागतः । कर्णिकाराश्चचूताश्चचम्पकाःपारिभद्रकाः
पलाशाः पाटलाः कुन्दा रक्ताशोकाश्च पुष्पिकाः ।
पद्मिन्यः सिन्धुवाराश्च मालत्यो यूथिका लताः ॥ २३ ॥
कह्लारकरवीराश्च सङ्कर्षादिव पुष्पिताः । पुष्पावचयनं कुर्मो वनेऽस्मिन्सुमनोहरे ॥
इत्युक्त्वा ता वनंजग्मुराकाशतनयायुताः । पुष्पाण्याहरमाणास्तुविचरन्त्यस्ततस्ततः
कञ्चिद्गजेन्द्रंददृशुःशुभ्रदन्तद्वयोज्ज्वलम् । गण्डभित्तितलोद्भूतमदधाराढ्ययोज्ज्वलम्
उन्नतं करिणीयूथैः समुपेतं रजोज्ज्वलम् । फूत्कारिपुष्करप्रोद्यच्छीकरापूरिताननम्
दृष्ट्वा चोद्विग्नहृदया वनस्पतिमुपाश्रिताः । एतस्मिन्नन्तरे चाऽऽशु ददृशुर्हयमुत्तमम् ॥
अकलङ्केन्दुधवलं जाम्बूनदपरिष्कृतम् ।
स्फुरद्विद्युल्लतायुक्तशरन्मेघमिवोन्नतम् ॥ २९ ॥
तस्मिंस्तु पुरुषं कृष्णं मदनाकारवर्चसम् । पुण्डरीकदलाकारकर्णान्तायतलोचनम् ॥३०
सुसूक्ष्मक्षौमसंवीतनीलचूलिकयोज्ज्वलम् ।
पद्मरागमणिद्योतिस्फुरत्कुण्डलमण्डितम् ॥ ३१ ॥
सुवर्णरत्नखचितशार्ङ्गदिव्यधनुर्धरम् । अपरेण करेणैव वहन्तं काञ्चनं शरम् ॥ ३२ ॥
पीतकक्षौमसम्वीतकटिदेशं सुमध्यमम् । रत्नकङ्कणकेयूरकटिसूत्रविराजितम् ॥ ३३॥
विशालवक्षः संशोभिदक्षिणावर्तसंयुक्तम् । स्वर्णयज्ञोपवीतेनस्फुरत्स्कन्धंमनोहरम्
ईहामृगं समुद्दिश्य महावेगादनुद्रुतम् । तं दृष्ट्वा विस्मिता नार्यः सस्मितास्तस्थुरत्रवै
तं दृष्ट्वा हयमारूढं गजेन्द्रोनम्रमस्तकः । तुण्डमुद्धृत्य गर्जन्वै विनिवृत्त्ययथौवनम्
तस्मिन्गतेगजेतत्र हयारूढः समाययौ । ईहामृगं विचिन्वानः पुष्पलावीस्समीपतः
ताः समेत्य स चोवाच तुरगोपरिसंस्थितः । अत्रागतोमृगःकश्चिदीहामृगइतीरितः
दृष्टो वा भवतीभिः स ब्रूत मे कन्यका इति ॥ ३९ ॥

श्रीवराह उवाच

प्रत्यूचुस्तास्तु तं कन्या दृष्टोऽस्माभिर्न कश्चन ॥ ४० ॥



किमर्थमागतोऽस्माकं वनम्वरधनुर्धरः । अत्रावध्या मृगाः सर्वे वर्तमाना निषादप !॥
आशु गच्छ वनादस्मादाकाशनृपपालितात् । इति तासाम्वचःश्रुत्वाहयादवरुरोहसः
काम्तु यूयमियञ्चापि कन्यकाम्बुजसन्निभा । सुभगाचारुसर्वाङ्गीपीनोन्नतपयोधरा
ब्रूत मेऽहं गमिष्यामि श्रुत्वा स्वस्याऽऽलयङ्गिरिम् ॥ ४३ ॥
इति तस्या वचः श्रुत्वाधरण्यात्मजयेरिता । सखीपद्मावतीप्राह निषादम्पर्वतालयम्
आकाशराजतनया वसुधातलसम्भवा । अस्माकं नायिका शूर! पद्मिनीनाम नामतः ॥
ब्रूहि त्वं सुभगाकार ! किन्नामा कस्य वा सुतः ।
जातिः का कुत्र ते वासः किमर्थन्त्वमिहाऽऽगतः ॥
इति पृष्टः स ताः प्राह मन्दस्मितमुखाम्बुजः ॥ ४६ ॥
दिवाकरकुलम्प्राहुरस्माकन्तुपुराविदः । तस्य नामान्यनन्तानि पावनानिमनीषिणाम्
वर्णतो नामतश्चापि कृष्णं प्राहुतपस्विनः । ब्रह्मद्विषां सुरारीणांयस्यचक्रंभयावहम्
यस्यशङ्खध्वनिं श्रुत्वामोहमीयुर्हि वैरिणः । यस्य वै धनुषस्तुल्यं धनुर्नैवाऽमरेष्वपि
तं मां वीरपतिं प्राहुर्वेङ्कटाद्रिनिवासिनम् । तस्माददद्रितटात्सोऽहं निषादैरनुगैर्वृतः ॥
मृगयार्थं हयारूढो युष्माकं वनमागतः । मयाऽप्यनुद्रुतः कश्चिन्मृगो वायुगतिर्ययौ
तमदृष्ट्वावनं पश्यन्दृष्टवान्सुभगामिमाम् । कामादिहागतोऽहंवोमयाकिंलभ्यतेस्त्रियम्
इति कृष्णवचः श्रुत्वाक्रुद्धास्ताःपुनरब्रुवन् । आकाशराजोदृष्ट्वात्वांकृत्वानिगडबन्धनम्
यावन्नयति तावत्त्वं गच्छ शीघ्रं स्वमालयम् ॥ ५३ ॥
तर्जितस्ताभिरेवं स हयमारुह्यशीघ्रगम् । युक्तः स्वानुचरैः सर्वैर्ययौ द्रुततरं गिरिम्
इति श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे
श्रीवेङ्कटाचलमाहात्म्ये धरणीवराहसम्वादे उद्यानवासिन्याः पद्मावत्याःसमीपे
नारदगमनश्रीनिवासमृगयादिवर्णनंनामचतुर्थोऽध्यायः ॥ ४ ॥

# पञ्चमोऽध्यायः

## पद्मावतीदर्शनेनश्रीनिवासस्यमोहप्राप्तिः

श्रीवराह उवाच

सम्प्राप्यंत्चालयदिव्यमवतीर्यहयोत्तमात्। विसृज्यसोऽनुगान्सर्वान्देवान्कैरातरूपकान्
विश्रमध्वमिति प्रोच्यविवेशमणिमण्डपम्। आरुह्य मणिसोपानंपञ्चकक्षाअतीत्य च
मुक्तागृहं समासाद्य तस्मिँल्लोलायिते शुभे। नवरत्नमये मञ्चे सम्विवेशावशो हरिः
संस्मरन्पद्मगर्भाभांतामेवायतलोचनाम्। तनुमध्यांपीनकुचांमन्दस्मितमुखाम्बुजाम्
क्षीराब्धितनयामेव मेने पद्मोद्भवां शुभाम्।
तस्यां गतमना देवः श्रीनिवासो मुमोह च ॥ ५ ॥

ततो मध्याह्नसमये कृत्वान्नं दिव्यमुत्तमम्। सूपदंशं सुगन्धं च देवार्हमतिशोभनम्
शुद्धान्नं पायसान्नं च गौडं मुद्गान्नमेव च। कृत्वा पञ्चविधापूपान्पूरिकावटकानपि ॥
देवं द्रष्टुं ययौ शीघ्रं सखी बकुलमालिका। पद्मावती पद्मपत्रा चित्ररेखासमन्विता
निवेश्य द्वारि देवस्यताः सर्वाः प्रमदोत्तमाः। विवेशतत्समीपंसास्वयंबकुलमालिका
गत्वा समीपं देवस्य ववन्दे भक्तिभावतः। दृष्ट्वाऽथ देवं विवशं पर्यङ्के रत्नभूषिते ॥
पादसंवाहनं कृत्वा निमीलितविलोचनम्। तंध्यायन्तंचकिमपिव्याजहारशुचिस्मिता
उत्तिष्ठ देवदेवेश किं शेषे पुरुषोत्तम!। परमान्नं कृतं देव! भोक्तुमागच्छ माधव!॥
किं वा त्वमार्तवच्छेषे सर्वलोकार्तिनाशन। मृगयामटता देव किं दृष्टं भवता वने ॥
अवस्थाते विशालाक्ष! कामुकस्येवदृश्यते। कादृष्टादेवकन्यावामानुषीवाऽहिकन्यका
ब्रूहि मे त्वमचिन्त्यात्मन्कन्यां तां चित्तहारिणीम् ॥ १५ ॥

श्रीवराह उवाच

तस्यास्तद्वचनं श्रुत्वा निःश्वासमकरोद्विभुः। निःश्वसन्तंपुनःप्राहप्रीताबकुलमालिका
एवं मनोहरा का सा तवापि पुरुषोत्तम!। तामवोचद्धृषीकेशोवक्ष्यामि शृणु तत्त्वतः



श्रीभगवानुवाच

पुरा त्रेतायुगे पुण्ये रावणं हतवानहम्। तदा वेदवती कन्या साहाय्यमकरोच्छ्रियः
सीतारूपाऽभवल्लक्ष्मीर्जनकस्य महीतलात्। गते मयि तु मारीचं हन्तुं पञ्चवटीवने ॥
ममानुजोऽपिमामेवसीतया चोदितोऽन्वयात्। तदन्तरेराक्षसेन्द्रोहर्तुं सीतामुपाययौ
अग्निहोत्रगतो वह्निस्तं ज्ञात्वा रावणोद्यमम्।
आदाय सीतां पाताले स्वाहायां सन्निवेश्य च ॥ २१ ॥

तेनैव रक्षसा स्पृष्टां पुरा वेदवतीं शुभाम्। अग्नौ विसृष्टदेहां तां संहर्तुं रावणं पुनः
सीतायाः रूपसदृशीं कृत्वा चैवोत्ससर्ज ह। सा रावणहृताभूत्वालङ्कायांचनिवेशिता
हते तु रावणे पश्चात्पुनरग्निंविवेशसा। अग्निस्तुरक्षितांलक्ष्मींस्वाहायांममजानकीम्
दत्त्वा हस्ते च मामाह सीतया सहितां सखीम्।
इयं वेदवती देव सीतायाः प्रियकारिणी ॥ २५ ॥

सीतार्थं राक्षसपुरे तेन बन्दीकृता स्थिता। तस्मादेनां वरेणैव प्रीणय त्वं श्रिया सह
इति वह्निवचः श्रुत्वा सीता मामवदच्छुभा। मम प्रीतिकरीनित्यमियंवेदवतीविभो!
तस्मात्परां भागवतीं देवैनां वरय प्रभो!॥ २८ ॥

श्रीभगवानुवाच

तथा देवि करिष्यामि ह्यष्टाविंशे कलौ युगे। तावदेषा ब्रह्मलोके वसत्वमरपूजिता
पश्चात्तु भूमितनया भविष्यति वियत्सुता। इति दत्तवरा पूर्वं मया लक्ष्म्याचसुन्दरी
अद्य नारायणपुरे सम्भूता धरणीतलात्। पद्मासमा पद्मनेत्री पद्मा दत्तवरा सती॥३१
सखीभिरनुरूपाभिर्वने पुष्पाणि चिन्वती। मृगयामटता तत्र मया दृष्टा मनोरमा ॥
तस्यारूपं मया वक्तुं न शक्यं शतहायनैः। लक्ष्म्येव च तयामेऽद्यसङ्गमोभवितायदि
प्राणाः स्थिरा भविष्यन्ति सत्यमित्यवधारय ॥ ३४ ॥

त्वं तत्र गत्वातांकन्यांदृष्ट्वाबकुलमालिके। जानीहिरूपलावण्यादियंयोग्येतिचाम्य वै
अनवद्या विशालाक्षी पद्मेन्दीवरलोचना ॥ ३५ ॥

इत्युक्त्वामोहमापन्नं तं प्राह बकुला पुनः। इतो गच्छामि देवेश! मनोज्ञा तव यत्र सा

मार्गं वद रमाधीश! गमिष्ये येन तां प्रति । एवमुक्तो रमाधीशस्तांप्राह बकुलस्त्रजम्

इतो गच्छ महाभागे ! श्रीनृसिंह गुहायतः ।

तन्मार्गेणाऽवतीर्याऽस्माद् भूधरेन्द्रान्मनोरमात् ॥ ३८ ॥

अगस्त्याश्रममासाद्य दृष्ट्वा लिङ्गं तदर्चितम् । अगस्त्येश इतिख्यातं सुवर्णमुखरीतटे
तीरेणैव ततो गच्छ शुकब्रह्म ऋषेर्वनम् । पश्यन्ती स्वर्णमुखरींतत्रकल्लोलमालिनीम्
तत्र पद्म सरोनाम पावनं पद्मसंयुतम् । तत्र स्नात्वाऽथ तत्तीरे तपन्तं मुनिसत्तमम्
छायाशुकं नमस्कृत्य कृष्णं च बलसंयुतम् । आराध्यमानं मुनिनाशुकेन सततं शुभे
इन्द्रनीलमणिश्यामं पीतनिर्मलवाससम् । तीर्थयात्रां गमिष्यन्तंबलभद्रंसिताकृतिम्
उपासयन्तम्मन्त्राणि मुक्तान्वितकरद्वयम् । उद्यन्तम्पादुकायुक्तम्बलभद्रम्प्रणम्य च ॥
आदाय स्वर्णकमलं सरसोऽस्माद्वरानने । तीर्त्वा सुवर्णमुखरीं वनान्युपवनानि च ॥
अरणीतीरमासाद्य विश्रम्य च वनान्तरे । नारायणपुरीं दृष्ट्वा विस्मयं च गमिष्यसि

तस्याश्चोपवने वृक्षान्पुष्पाढ्यान्फलसंयुतान् ।

पनसाऽऽम्रशिरीषांश्च कुन्दतिन्दुकपाटलान् ॥ ४७ ॥

पुन्नागनागवरणरसालाङ्कोलचम्पकान् । बकुलामलकान्सालांस्तालहिन्तालपद्मकान्
जम्बूनिम्बकदम्बैलापिप्पलीमधुकार्जुनान् । प्रियङ्गुहिङ्गुखर्जूरमायूराशोकलोध्रकान् ॥
अश्वत्थोदुम्बरप्लक्षवदरीभूर्जकीचकान् । चिञ्चाकिंशुकमन्दारशाल्मलीबीजपूरकान् ॥
पूगनारङ्गलिकुचनारिकेलवनाकुलान् । मल्लिकामालतीकुन्दयूथिकाकेतकीयुतान् ॥
करवीराब्जसम्पन्नाम्राजरम्भाविराजितान् । मयूरकीरगरुडशुकसारससङ्कुलान् ॥५२॥
भृङ्गझङ्कारनिबिडानारामान्सुमनोहरान् । पश्यन्ती परमं हर्षमवाप्य च नदीतटे ॥
गत्वा पूर्वोत्तरे मार्गे पुरीमिन्द्रपुरीसमाम् । गङ्गयेवाऽऽवृतांनित्यं सरितारणिनामया

आकाशराजनगरीं गत्वा तत्रोचितं कुरु ॥ ५५ ॥

श्रीवराह उवाच

इत्यादिश्य सुराधीशः सखीं तां बकुलाभिधाम् ।

विसृज्य शयने शुभ्रे स शिश्ये श्रीसमन्वितः ॥ ५६ ॥



प्रणम्य देवदेवेशं सखी बकुलमालिका । गुञ्जामणिसमाकारं रक्ताश्वमधिरुह्य सा ॥

यथोक्तमार्गेण ययौ पश्यन्ती विविधान्मृगान् ।

मत्तेभान्पर्वताकाराञ्छ्वेतदन्तविभूषितान् ॥ ५८ ॥

करिणीयूथसहिताञ्जलदादानतत्परान् । सिंहाञ्छतघनप्रख्यान्सिंहीयूथैरनुद्रुतान् ॥५९

शार्दूलर्क्षांश्च खड्गांश्च शरभान्गवयान्मृगान् ।

कृष्णसारांश्च गोमायूञ्छशांश्च प्रियकानपि ॥ ६० ॥

सारसांश्च मयूरांश्चमार्जारान्वनगोचरान् । वृकाञ्छुकान्सूकरांश्चसुवाचःपक्षिणस्तथा

पश्यन्ती विविधाकारांस्तुष्यन्ती च मुहुर्मुहुः ।

आससादाऽरणीतीरं पश्चिमं पादपाकुलम् ॥ ६२ ॥

अवतीर्याऽरुणादश्वादगस्त्येशसमीपतः । दृष्ट्वाऽगस्त्येश्वरं लिङ्गमगस्त्येन सुपूजितम् ॥

तत्र स्नात्वा च पीत्वा च विशश्राम नदीतटे ॥ ६४ ॥

तत्राऽऽगताराजगृहाद्योषितोदेवसन्निधौ । सखीःपद्मालयायास्ता दृष्ट्वा बकुलमालिका

गत्वा समीपे तासां सा किंवदन्ती स्म पृच्छति ॥ ६६ ॥

बकुलमालिकोवाच

कायूयं योषितो ब्रूत विचित्राभरणस्त्रजः । कुतः समागता ह्यत्रकिंकार्यंवोऽमलाननाः
तास्तु तस्यावचःश्रुत्वास्मितपूर्वमथाऽब्रुवन् । श्रृणुष्वावहितादेविवयंवक्ष्यामहेऽधुना

इति श्रीस्कन्दे महापुराण एकाशीतिसाहस्त्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रवेङ्कटाचलमाहात्म्येधरणीवराहसम्वादेपद्मावतीदर्शनेनश्रीनिवासस्य मोह-प्राप्त्यादिवर्णनंनाम पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः

### बकुलमालिकाम्प्रतिसखीविनिवेदितपद्मावत्युदन्तवर्णनम्

योषित ऊचुः

वयमाकाशराजस्य शुद्धान्तनिलयाः स्त्रियः । सख्यः पद्मालयाया वै दुहितुर्वसुधापतेः
राजपुत्रीं पुरस्कृत्य गताः पूर्वं वनान्तरम् । कुर्वन्त्यः पुष्पावचयं राजपुत्र्यर्थमाकुलाः
वृक्षमूले समासीनास्तत्रपश्यामपूरुषम् । इन्द्रनीलमणिश्याममिन्दिरामन्दिरोरसम्
ईषत्स्मितमुखं चारुपीनदीर्घभुजद्वयम् । मृग्रपीताम्बरं हेमबाणबाणासनोज्ज्वलम् ॥
सुवर्णमुकुटं हारकेयूरादिविभूषितम् । तं तु पद्मालया दृष्ट्वा सखी कमललोचना ॥५

द्रुतहेमनिभाकारा पश्य पश्येति साऽब्रवीत् ।
पश्यन्तीनां तदाऽस्माकं गतोऽन्तर्धानमाशु सः ॥ ६ ॥
सा सखी मूर्च्छिताऽस्माभिर्नीता राजगृहं ततः ॥ ७ ॥

दृष्ट्वाऽस्वस्थांनृपः पुत्रीमपृच्छद्दैवचिन्तकम् । वद विप्रेन्द्र पुत्र्या मे ग्रहचारफलं मुने
बृहस्पतिसमोविप्रोविचार्याऽऽत्मनि खेचरान् । अनुकूला ग्रहाःसर्वे तवपुत्र्यानृपोत्तम
किन्तु नित्यं ग्रहफलं किञ्चिद्भ्रान्तिकरं नृप । तमुवाच पुनर्धीमान्प्रश्नकालंविचार्यच
छायां गुणित्वा लग्नञ्चतत्फलानिविचार्यच । लग्नेलग्नाधिपश्चन्द्रःकेन्द्रेचैवबृहस्पतिः
निद्राति दिनपक्षी तु प्रश्नपक्षीतुराज्यगः । शृणुराजन्फलंतस्यस्वास्थ्यमेवभविष्यति
उत्तमः पुरुषः कश्चिदागतः कन्यकाम्प्रति । तं दृष्ट्वा मूर्च्छिता पुत्रीतेनयोगंसमेष्यति
तेनैव प्रेषिताः काचिदागमिष्यतिकन्यका । सातुवक्ष्यतियद्वाक्यंतद्धितंतेभविष्यति
तत्कुरुष्व महाराज ! सत्यंसत्यं वदाम्यहम् । किंचसर्वार्थदंयत्तुसर्वव्याधिविनाशनम्

वक्ष्यामि तत्कुरुष्वाऽद्य पुत्र्यास्तव सुखावहम् ।
कार्याऽगस्त्यलिङ्गस्य ब्राह्मणैरभिषेचनम् ॥ १६ ॥
इत्युक्त्वाऽथ गृहं यातो राजानं दैवचिन्तकः ॥ १७ ॥



आकाशराजोऽपि तदा विप्रानाहूय वैदिकान् ।
अभ्यर्च्याऽऽज्ञापयामास गत्वा देवालयं द्विजाः ॥ १८ ॥

महाभिषेकं शम्भोश्च कुरुध्वं मन्त्रपूर्वकम् । इत्यनुज्ञाप्य तानस्मानाहूयाऽभ्यवदच्छुभे
महाभिषेकसम्भारान्सम्पादयत कन्यकाः । इत्याज्ञप्ता नृपेणैव वयं देवालयं गताः ॥

ब्रूहि त्वं सुभगेऽस्माकं त्वदाऽऽगमनमञ्जसा ।
कुतोऽसि कस्य वाऽर्थेन क्व वा जिगमिषा हि ते ! ॥ २१ ॥
दिव्याश्वमधिरुह्येमं देवलोकादिवाऽऽगता ॥ २२ ॥

श्रीवराह उवाच

इति ताभिस्तदा पृष्टा हृष्टा बकुलमालिका । प्रोवाचवाचंमधुरांहर्षयन्तीवबालिकाः

बकुलमालिकोवाच

श्रीवेङ्कटाद्रेः प्राप्ताऽहं नाम्ना बकुलमालिका । धरणींद्रष्टुकामाऽहमारुह्येमं तुरङ्गमम्
द्रष्टुं शक्या भवेद्देवी किमु तत्रनृपालये । इतितस्यावचःश्रुत्वाताःप्रोचुर्नृपकन्यकाः

अस्माभिः सहिता त्वमद्यैव द्रक्ष्यसे धरणीं शुभे !।
इत्युक्ता सा ततस्ताभिरागता नृपमन्दिरम् ॥ २६ ॥
आगच्छन्तीषु तास्वेवं धरणी तु पुलिन्दिनीम् ॥ २७ ॥
आयान्तीं वीथिकायां सा सगुञ्जाशङ्खभूषिताम् ।
शिशुं स्तनन्धयं पृष्ठे बद्ध्वा वस्त्राञ्चलेन वै ॥ २८ ॥

वदामि सत्यं शृणुतभूतंभव्यंभविष्यकम् । वदन्तीवीथिवीथीषुतामाहूयशुचिस्मिता

स्वर्णशूर्पं समादाय तस्मिन्मुक्ता निधाय च ।
त्रिप्रस्थमात्रांस्त्रीन्राशीन्कृत्वा तस्यै निधाय च ॥ ३० ॥

वदसत्यंपुलिन्दे! त्वमेष्यद्वाभूतमेववा । इत्येवंधरणीदेवी पृच्छन्तीतांस्थिताऽभवत्

पृष्टा साऽवदद्दस्यास्तु मनसा यद्विचिन्तितम् ।
मध्यराशौ चिन्तितं ते वद कल्याणि! मे ऋजु ॥ ३२ ॥
ओमित्याहाऽद्य धरणी पुलिन्दीं राजवल्लभा ।

धरण्युवाच

राशिरुक्तः फलम्ब्रूहि धनराशिं ददामि ते ॥ ३३ ॥

पुलिन्द्योवाच

सत्यम्वदामि ते सुभ्रु शिशोरन्नं प्रयच्छ मे । इत्युक्तासातु धरणीस्वर्णपात्रेऽन्नमाददे दत्त्वातस्यैपुलिन्दिन्यैसत्यंब्रूहीतिसाऽवदत् । सक्षीरमन्नमादाय दत्त्वापुत्रायभामिनी सा सत्यमवदत्सुभ्रू दुहितुर्देहशोषणम् । पुरुषादागतं भीरु ! तद्रूपाऽदर्शनादियम् ॥ अङ्गतापं समापन्ना ह्यनङ्गशरपीडिता । स तु देवादिदेवो वै वैकुण्ठादागतः स्वयम् श्रीवेङ्कटाद्रिशिखरे स्वामिपुष्करिणीतटे । मायावी परमानन्दः श्रिया सह रमापतिः कामरूपी विहरते भक्ताभीष्टप्रदो हरिः । स तुरङ्गं समारुह्य विरहन्काननान्तरे ॥३६॥ आगत्योपवनं राज्ञि तव कन्यां स दृष्टवान् । रमासमामिमां दृष्ट्वास्वयं कामवशंगतः

स्वसखीं ललितां देवः प्रेषयिष्यति तेऽन्तिकम् ।

रमेव तं समेत्यैषा रमिष्यति सुखं चिरम् ॥ ४१ ॥

एतत्सत्यं मम वचः पश्याद्यैवनृपात्मजे !। पुत्रस्यान्नंप्रयच्छेतितूर्णामासपुलिन्दिनी अन्नं दत्त्वापुनर्भूरितस्यैतांविससर्जह । तस्यांविनिर्गतायान्तुपुलिन्दिन्यामनिन्दिता

उत्थाय चाऽङ्गणात्तस्माद्विवेशान्तःपुरं शुभम् ।

यत्र पद्मालया कन्या समास्ते स्वसखीवृता ॥ ४४ ॥

गत्वा पुत्री समीपस्था कन्यां कामातुरां सुताम् ।

पुत्रि ! किं ते करिष्यामि वस्तु किम्वा प्रियं शुभे !॥ ४५ ॥

इति मात्राऽभिपृष्टा सा मन्दमाह मनस्विनी ॥ ४६ ॥

नेत्राभिरामं यल्लोके सतामपि मनःप्रियम् । यद्द्रष्टुकामा ब्रह्माद्या यत्तुसर्वगतं महत् तेजसामपि तेजस्वि देवानामपि दैवतम् । भक्तैस्सद्भिरिह प्राप्यमभक्तैर्न कदाचन तस्मिन्नेव मनो मेऽम्ब वस्तुनीह प्रवर्तते । तदेवाऽन्विष्यतांमातर्भक्तानांसर्वकामदम्

श्रीवराह उवाच

एतच्छ्रुत्वाऽथ धरणी तामपृच्छत्पुनःसुताम् । तद्भक्तलक्षणम्ब्रूहियैःप्राप्यन्तत्सुलोचने



पद्मालयोवाच

भक्तानां लक्षणं मातः! शृणु गुह्यं समाहिता । शङ्खचक्राङ्कितानित्यंभुजयुग्मेवसुन्धरे ऊर्ध्वपुण्ड्रं सान्तरालं तेषामेव विशेषतः । पुण्ड्रानि द्वादश पुनर्धारयन्ति तथाऽपरे ललाटोदरहृत्कण्ठे जठरे पार्श्वयोरपि । कूर्परयोर्भुजद्वन्द्वे च पृष्ठे च गलपृष्ठके ॥५३ केशवादीनि नामानिद्वादशाङ्गेषुद्वादश । वासुदेवेति तन्मूर्ध्निधारयन्तिनमोऽस्त्विति तेषान्तुनियमान्वक्ष्ये मातः! शृणु मनोरमान् । वेदपारायणरताःकर्म कुर्वन्तिवैदिकम् सत्यम्वदन्ति ये देवि नासूयन्तिपरान्कचित् । परनिन्दां न कुर्वन्तिपरस्वंनहरन्तिच

न स्मरन्ति न पश्यन्ति न स्पृशन्ति कदाचन ।

परदारान्सुरूपांश्च ये च तान्विद्धि वैष्णवान् ॥ ५७ ॥

सर्वभूतदयावन्तः सर्वभूतहितेरताः । सदा गायन्ति देवेशमेतान्भक्तानवेहि वै ॥ ५८ येन केनचसन्तुष्टाःस्वदारनिरताश्च ये । वीतरागभयक्रोधास्तान्भक्तान्विद्धिवैष्णवान् एवंविधैर्गुणैर्युक्ताःपञ्चायुधधरा अपि । पित्रा चाऽऽचार्यरूपेणशिष्टेनाऽन्येन वा पुनः स्वगृह्योक्तविधानेन वह्निमादाय वै बुधः । चक्राद्यायुधमन्त्रेणजुहुयात्षोडशाहुतीः मूलमन्त्रेण सूक्तेन पौरुषेण ततः परम् । जातवेदः सुमन्त्रेणपश्चादष्टोत्तरं शतम् ॥ हुत्वा महाव्याहृतिभिश्चक्रादींस्तत्रतापयेत् । सह्यान्सुतप्तान्गुरुणामन्त्रवद्धारयेद्बुधः भुजद्वये शङ्खचक्रे मूर्ध्नि शार्ङ्गशरौ तथा । ललाटे तु गदा धार्या हृदये खड्गमेव च एवं धार्याणि पञ्चैव विष्णुभक्तैर्मुमुक्षुभिः । अथवा भुजयोश्चक्रशङ्खौचैव सुलक्षणौ एवंलाञ्छनयुक्ता ये भक्तास्तेवैष्णवाःस्मृताः । तैरेवलभ्यंतद्ब्रह्म सदाचारसमन्वितैः

तस्मिन्नेव मम प्रीतिस्तत्प्राप्तिं वाञ्छते ( काङ्क्षते ) मनः ।

मातर्विष्णुं विनाऽन्येषु वाञ्छा काचिन्न जायते ॥ ६७ ॥

स्मरामि श्यामलं विष्णुं वदामि हरिमच्युतम् ।

तेनैव मातर्जीवामि तद्योगे चिन्त्यतां विधिः ॥ ६८ ॥

श्रीवराह उवाच

इत्युक्त्वा मातरं दीना विररामाऽम्बुजानना ।

तच्छ्रुत्वा चिन्तयामास विष्णुः प्रीतः कथम्भवेत् ॥ ६९ ॥

एतस्मिन्नन्तरे कन्या अगस्त्येशं समर्च्य च । आगताधरणीं द्रष्टुं सहैव वकुलस्रजा

आगतान्ब्राह्मणान्साऽथ पूजयित्वा सुभोजनैः ।

दत्त्वाऽथ दक्षिणाः पूर्णा वस्त्रालङ्कारसंयुताः ॥ ७१ ॥

आशिषो वाचयित्वाऽथ वाञ्छितार्थस्य सिद्धये ।

विसृज्य ब्राह्मणान्सर्वानथाऽपृच्छत्स्वयोषितः ॥ ७२ ॥

पूजयित्वा ह्यगस्त्येशमागतास्ता मनस्विनीः ॥ ७३ ॥

इति स्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेङ्कटाचलमाहात्म्ये धरणीवाराहसम्वादे वकुलमालिकांप्रतिसखीविनिवेदित-पद्मावत्युदन्तविष्णुभक्तलक्षणादिवर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः

### धरणीदेव्यै वकुलमालिकानिवेदितश्रीनिवासोदन्तवर्णनम्

धरण्युवाच

का वा ब्रूत वरा कन्या युष्माभिः सङ्गता कुतः । किमर्थमागताचेह पूज्यैषाप्रतिभातिमे

कन्यका ऊचुः

एषा दिव्याङ्गना देवी त्वयि कार्यार्थमागता । देवालयेसङ्गतेयमस्माभिःशिवसन्निधौ

पृष्टाऽवदच्च भवतीं द्रष्टुमेवाऽऽगतेति वै । शक्ता द्रष्टुं राजगृहे मया राज्ञी सुखेन वा॥

एवं पृष्टास्ततो ब्रूमः सहाऽस्माभिश्च गम्यताम् ।

वयं तु धरणीदास्यो गमिष्यामो नृपालयम् ॥ ४ ॥

इत्युक्ताऽस्माभिरायाता त्वत्समीपं वसुन्धरे !।

भवत्या पृच्छ्यतामेषा किमित्याऽऽगमनं तव ॥ ५ ॥



श्रीवाराह उवाच

इति तासां वचः श्रुत्वा तामपृच्छद्वसुन्धरा ॥ ६ ॥

धरण्युवाच

कुतस्त्वमागतादेवि! किं वा कार्यंमयातव । ब्रूहिसत्यंकरिष्यामित्वदागमनकारणम्

वकुलमालिकोवाच

वेङ्कटाद्रेः समायाता नाम्ना वकुलमालिका ॥ ८ ॥

स्वामी नारायणोऽस्माकमास्तेश्रीवेङ्कटाचले । कदाचिद्धयमारुह्यहंसशुक्लंमनोजवम्

मृगयार्थं गतो राज्ञो वेङ्कटाद्रेः समीपतः । वनानि विचरन्काले शोभने कुसुमाकरे ॥

पश्यन्मृगान्गजान्सिंहान्गवयाञ्छरभान्रुरून् ।

शुकान्पारावतान्हंसान्पत्रिणोऽन्यान्वनान्तरे ॥ ११ ॥

गजराजं तत्र कञ्चिद्यूथपं मदवर्षिणम् । करेणुसहितं तुङ्गमन्वगच्छत्सुरोत्तमः ॥१२॥

वनाद्वनान्तरं गत्वा नृपं शङ्खमुपागमत् । तपस्यन्तं बृहच्छैले प्रतिष्ठाप्य जनार्दनम् ॥

श्रीभूमिसहितं नित्यमर्चयन्तं च भक्तितः । शङ्खनागबिलंनाम सरः पावनमुत्तमम्

तत्सरस्तीरमासाद्य तुरङ्गादवरुह्य च । गजवेषं समासाद्य तमपृच्छन्नृपोत्तमम् ॥१५॥

क्रियते किं नृपश्रेष्ठ ! पादेऽस्मिञ्छेषभूभृतः ॥ १६ ॥

शङ्ख उवाच

अहं हैहयदेशीयःपुत्रः श्वेतस्य भूभृतः । महाविष्णोः प्रीतयेऽत्र कृतवानखिलान्क्रतून्

अदर्शनान्महाविष्णोर्निर्विण्णोऽहं नृपात्मज !।

तदानीमवदद्दिव्या वाणी सर्वार्त्तिनाशिनी ॥ १८ ॥

राजन्नाऽत्र भविष्यामि प्रत्यक्षस्ते वचः शृणु ।

गच्छ नारायणाद्रिं त्वं तपः कुर्विति मां स्फुटम् ॥ १९ ॥

ततो देशमहं त्यक्त्वा तपसाऽऽराधयाम्यहम् ।

अत्र देवं नृपाऽचिन्त्यं प्रतिष्ठाप्य श्रियः पतिम् ॥ २० ॥

अगस्त्यानुग्रहान्नित्यमर्चयामि विधानतः । इतितस्य वचःश्रुत्वासोत्प्रासंप्राहतंविभुम्

गच्छ नारायणाद्रिंत्वमस्यपादेकिमास्यते । आरुह्याऽनेनमार्गेणपश्चिमेशिखरेस्थितम्

प्रणम्य विष्वक्सेनं त्वं बालं न्यग्रोधमूलतः ।

स्वामिपुष्करिणीं गत्वा स्नात्वा तीरेऽथ पश्चिमे ॥ २३ ॥

अश्वत्थं तत्र वल्मीकं द्रक्ष्यसे नृपनन्दन !। तयोर्मध्यंसमासाद्य तपः कुर्वित्यचोदयत्

कश्चिच्छ्वेतो वराहोऽस्मिन्वल्मीके चरति ध्रुवम् । सतुपुण्यवतामेवदर्शनंयातिभूपते

श्रीवाराह उवाच

इत्यादिश्य हयारूढो जगाम मृगयाम्वभुः । चरन्वनाद्वनंसुभ्रूः समासाद्यारणींनदीम्

अवरुह्य हयात्तत्र विचचार तटे शुभे । वनान्तादागतो वायुः पद्मकह्लारशीतलः ॥

श्रमापनयनो मन्दं सिषेवे पुरुषोत्तमम् ॥ २७ ॥

तरवः पुष्पवर्षाणि विकिरन्तः सिषेविरे । एवं स विचरन्देवः पुष्पभारानतांस्तरून्

विचिन्वन्गजराजन्तं पुष्पलार्वार्ददर्श ह । कन्याः सुवेषा रुचिरा मेघेष्विव शतह्रदाः

तासां मध्यगतां तन्वीं ददर्शाऽतिमनोहराम् ।

लक्ष्मीसमां हेमवर्णां तस्यां सक्तमना अभूत् ॥ ३० ॥

तां गृध्नुराह ताःकन्याःकेयमित्येवपूरुषः । उक्तस्तामिरियं कन्या वियद्राज्ञोमहाबल

इदं श्रुत्वा वचस्तासां हयमारुह्य वेगवान् ।

आजगामाऽऽशु भगवान्स्वालयं रुचिरं गिरिम् ॥ ३२ ॥

तत्र स्वालयमासाद्य स्वामिपुष्करिणीतटे । मामाहूयाऽवदद्देवो हलावकुलमालिके॥

वियद्राजपुरङ्गत्वाप्रविश्याऽन्तःपुरं सखि । तत्पत्नीं धरणींम्प्राप्य पृष्ट्वा कुशलमेव च

याचस्वतनयांतस्यारुचिराङ्कमलालयाम् । राज्ञोऽभिमतमाज्ञायशीघ्रमागच्छभामिनि!

इत्थं देवेन चाज्ञप्ता देवित्वद्गृहमागता । यथोचितं कुरुष्वेह राज्ञा मन्त्रियुतेन च ॥

कन्यया च विचार्यैव प्रोच्यतामुत्तरम्वचः ॥ ३७ ॥

श्रीवराह उवाच

अथ तस्या वचःश्रुत्वाप्रीता राज्ञी बभूवह । आहूयाऽऽकाशराजंतमुपेत्यकमलालयाम्

मन्त्रिमध्येऽवदद्देवीवचनाद्वकुलस्रजः । श्रुत्वा प्रीतोऽवदद्राजामन्त्रिणःसपुरोहितान्



आकाशराज उवाच

कन्या त्वयोनिजा दिव्या सुभगा कमलालया । अर्थिता देवदेनेनवेङ्कटाद्रिनिवासिना

पूर्णोमनोरथोमेऽद्य ब्रूत किं सम्मतं तु वः । श्रुत्वा मन्त्रिगणाःसर्वेराज्ञोवचनमुत्तमम्

प्रोचुः सुप्रीतमनसो वियद्राजं महीपतिम् ।

वयं कृतार्था राजेन्द्र ! कुलं सर्वोन्नतम्भवेत् ॥ ४२ ॥

भवत्कन्येयमतुला श्रिया सह रमिष्यति । दीयतां देवदेवाय शार्ङ्गिणे परमात्मने ॥

अयं वसन्तः श्रीमांश्च शुभं शीघ्रं विधीयताम् ॥ ४४ ॥

आहूय धिषणं लग्नं विवाहार्थं विधीयताम् ॥ ४५ ॥

तथाऽस्त्वित्याह्वयामाससुरलोकाद्बृहस्पतिम् । पप्रच्छकन्यावरयोर्विवाहार्थंनरेश्वरः

राजोवाच

कन्याया जन्मनक्षत्रं मृगशीर्षमितिस्मृतम् । देवस्यश्रवणर्क्षन्तुतयोर्योगोविचार्यताम्

श्रुत्वाऽब्रवीत्सधिषणस्तयोरुत्तरफल्गुनी । सम्मतासुखवृद्ध्यर्थंप्रोच्यतेदैवचिन्तकैः

तयोरुत्तरफल्गुन्यां विवाहः क्रियतामिति ।

वैशाखमासे विधिवत्क्रियतामिति सोऽब्रवीत् ॥ ४६ ॥

श्रीवराह उवाच

राजा तु धिषणं तत्र सम्पूज्याऽथ विसृज्य च । देवस्यदूतिकामाहगच्छदेवालयंशुभे

वैशाखे देवदेवाय कल्याणं वदसुव्रते । वैवाहिकविधानं तु कृत्वा चाऽऽगम्यतामिति

ततो देव्याःप्रियकरंशुकं दूतं तया सह । विसृज्य वायुंस्वसुतमिन्द्राद्यानयनेऽसृजत्

आहूय विश्वकर्माणं पुरालङ्कारकर्मणि । नियोजयामास सोऽपिनिर्ममेनिमिषान्तरात्

इन्द्रोऽसृजत्पुष्पवृष्टिं ननृतुश्चाप्सरोगणाः । धनदो धनधान्याद्यैः पूरयामास वेश्मतत्

यमस्तु रोगरहितांश्चकार मनुजान्भुवि । वरुणो रत्नजालानि मौक्तिकादीन्यपूरयत्

एवं सम्पाद्य सर्वाणि ययुर्देवा वृषाचलम् ॥ ५६ ॥

श्रीवराह उवाच

ततः सा हयमारुह्य शुकेन सहिता ययौ । श्रीवेङ्कटाद्रिमासाद्यदेवालयसमीपतः ॥ ५७

अवरुह्य तुरङ्गात्सा सशुकाऽभ्यन्तरं ययौ । दृष्ट्वा देवं रत्नपीठे श्रिया सह सुलोचनम्
प्रणम्य ह्यवदत्प्रीता कृत्यं तत्र कृतं विभो । माङ्गल्यवार्तां वक्तुं वै शुक एव समागतः
वदेति देवेनाऽऽज्ञप्तः शुको नत्वा तमब्रवीत् ।

शुक उवाच

त्वां प्रत्याह सुता भूमेर्मामङ्गीकुरु माधव !॥ ६० ॥

वदामि तव नामानि स्मरामि त्वद्वपुस्सदा । ध्रियन्ते तवचिह्नानिभुजाद्यङ्गे रमापते
त्वद्भक्तानर्चयामीह पञ्चसंस्कारसंयुतान् । त्वत्प्रीतये हि कर्माणि करोमि मधुसूदन
एवं सदैवाचारन्त्याः पित्रोरनुमते मम । कुरु प्रसादं देवेश मामङ्गीकुरु माधव ॥ ६३
इति विज्ञापयामास कमलस्था धरासुता । शुकस्य वचनं श्रुत्वासुप्रियंस्वात्मनोहरिः

श्रीभगवानुवाच

कर्तुं कल्याणमुद्वाहमागमिष्यामि चाऽमरैः । शुकगच्छवदैवंतामित्थंदेवोऽब्रवीदिति
शुकः श्रुत्वा देववाक्यमादाय वनमालिकाम् । देवदत्तांययौ शीघ्रं वियद्राजसुतां प्रति
तुलसीमालिकांदत्त्वामृगनाभिसुगन्धिनीम् । प्रणम्यदेवीमवदच्छुकोदेववचः शुभम्
श्रुत्वा तन्मालिकांगृह्यभूमिजाशिरसादधौ । चक्रेऽलङ्कारमुचितंदेवागमनकाङ्क्षिणी
वियद्राजोऽपि सानन्दमिन्दुमाहूय सादरम् । अन्नंविधीयतांराजन्विविधंरससंयुतम्
विष्णोर्नैवेद्ययोग्यं यत्परमान्नं विधीयताम् ।
देवानाञ्च ऋषीणाञ्च नराणामपि सम्मतम् ॥ ७० ॥
चतुर्विधं सुगन्धाढ्यममृतांशः सुधाकर !।
एवं कृत्वासन्विधानं प्रतीक्ष्याऽऽगमनं विभोः ॥ ७१ ॥
सभायां मन्त्रिसहितःसमास्तप्रीतमानसः । पुत्रीमलङ्कृतां कृत्वा धरणीसहितोनृपः
इति श्रीस्कान्दे महापुराण एकादशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे
श्रीवेङ्कटाचलमाहात्म्ये धरणीवराहसम्वादे धरणीदेव्यैवकुमालिका-
निवेदितश्रीनिवासोदन्तकमलालयाकल्याणविध्यादि
वृत्तान्तवर्णनंनाम सप्तमोऽध्यायः

---

# अष्टमोऽध्यायः

## श्रीनिवासस्यलक्ष्म्यादिकृतपरिणयालङ्कारवर्णनम्

श्रीवराह उवाच

ततोदेवाधिदेवोऽपिलक्ष्मीमाहूयभामिनीम् । किंकार्यंवदकल्याणिविवाहार्थंसुलोचने
आज्ञापयस्व स्वसखी रमे कार्यं कुरु प्रियम् ।
श्रीस्तु कृष्णवचः श्रुत्वा सखीराहूय चोदयत् ॥ २ ॥
श्रियाऽऽज्ञप्तातत:प्रीतिःसुगन्धंतैलमाददौ । श्रुतिःक्षौमंसमादायतस्थौदेवस्यसन्निधौ
भूषणानि समादाय स्मृतिरभ्याययौ मुदा । धृतिरादर्शमाधत्त शान्तिर्मृगमदं दधौ
यक्षकर्दममादाय ह्रीः स्थिता पुरतो हरेः । कीर्तिः कनकपट्टं च सरत्नं मुकुटं दधौ
छत्रं दधौ तदेन्द्राणी चामरं तु सरस्वती । द्वितीयं चामरं गौरी व्यजनैर्विजयाजये
आगतास्ताः समालोक्यश्रीरुत्थायाऽथसत्वरा । सुगन्धंतैलमादायदेवमभ्यञ्ज्यशीर्षतः
उद्वर्तितं गन्धचूर्णैर्देवाङ्गं परिमृज्य च ।
आनीतान्करिभिस्तोयकलशान्काञ्चनाञ्छतम् ॥ ८ ॥
वियद्गङ्गादितीर्थेभ्यः कर्पूरादिसुवासितान् ।
एकमेकं समादाय त्वस्नपिश्चद्रमा हरिम् ॥ ९ ॥
सन्मृज्य केशान्धूपेनतानाश्यामान्बबन्ध च । सुगन्धेनानुलिप्याङ्गंस्वर्णवर्णेनतद्विभोः
पीतकौशेयकंबद्ध्वाकट्यांकाञ्चीसमन्वितम् । मुकुटादिविभूषाभिर्भूषयामास चेन्दिरा
अङ्गुलीयकरत्नानि सर्वास्वेवाऽङ्गुलीषु च । आदर्शं दर्शयामास धृतिर्देवस्य सन्निधौ
दृष्ट्वाऽऽदर्शंदेवदेवोह्यूर्ध्वपुण्ड्रं स्वयंदधौ । आरुह्यगरुडंपश्चात्स्वयं लक्ष्मीसमन्वितः
ब्रह्मेशवह्निवरुणयमयक्षेशसेवितः । वसिष्ठाद्यैर्मुनीन्द्रैश्च सनकाद्यैश्च योगिभिः ॥ १४
भक्तैर्भागवतैर्युक्तो नारायणपुरीं ययौ । जगुर्गन्धर्वपतयो ननृतुश्चाऽप्सरोगणाः ॥१५
देवदुन्दुभयो नेदुस्तदा देवस्य सन्निधौ । जपन्तः स्वस्तिसूक्तानिमुनयस्तंसमन्वयुः

देवो देवगणैर्युक्तो विष्वक्सेनादिपार्षदैः ।
सखीभिस्स्यन्दनस्थाभिर्वकुलाद्याभिरन्वितः ।
आकाशराजस्य पुरमाससाद स्वलङ्कृतम् ॥ १७ ॥

देवमागतमालोक्य कन्यामैरावतस्थिताम् । पुरीं प्रदक्षिणीकृत्य गोपुरद्वारमागताम् आलोक्याऽऽकाशराजोऽपिसमानीयवधूवरौ । बन्धुभिःसहितस्तस्थौदेवमालोक्यकेशवम्

विष्णेर्मालां स्वकण्ठस्थां हस्तेनाऽऽदाय सस्मितः ।
कमलायाः स्कन्धदेशे मुमोच सुमनश्चिताम् ॥ २० ॥

आदाय मल्लिकामालां साऽस्य कण्ठेसमर्पयत् । एवं त्रिवारं तौकृत्वावाहनादवरुह्यच स्थित्वा पीठे क्षणंपश्चाद्गृहं विविशतुः शुभम् । ब्रह्मादिदेवयूथैश्चसहितौभूमिजाहरी माङ्गल्यसूत्रबन्धादि साङ्कुरार्पणमब्जजः । वैवाहिकं कारयित्वा लाजहोमान्तमेव च व्रतादेशं समाज्ञाय सहितौ कमलाहरी । चतुर्थेदिवसे सर्वं समापय्य चतुर्मुखः ॥२४ अनुज्ञाप्य वियद्राजमारोप्य गरुडे हरिम् । देवीभ्यां सहितं देवं देवैर्गन्तुं प्रचक्रमे दिव्यदुन्दुभिनिर्घोषैः सम्प्राप्य वृषभाचलम् । तुष्टुवुर्देवदेवेशं ब्रह्माद्या देवतागणाः ॥

शुकाद्यो मुनिगणास्तुष्टुवुः पुरुषोत्तमम् ।
स्तूयमानोऽथ देवोऽपि विवेश मणिमण्डपम् ॥ २७ ॥
रमाधरणिजाभ्यां च तत्र सिंहासनं ययौ ॥ २८ ॥
आकाशराजोऽपि तथा महेन्द्रादिसुरैः सह ।
पुत्रीविष्ण्वोः प्रियार्थं तु प्राभृतं कर्तुमुद्यतः ॥ २९ ॥

सौवर्णेषु कटाहेषु तडुलाञ्छालिसम्भवान् । मुद्गपात्राण्यनेकानि घृतकुम्भशतानि च पयोघटसहस्राणि दधिभाण्डान्यनेकशः । दिव्यानि चूतकदलीनारिकेलफलानि च

धात्रीफलानि कूष्माण्डराजरम्भाफलानि च ।
पनसान्मातुलुङ्गांश्च शर्करापूरितान्घटान् ॥ ३२ ॥
सुवर्णमणिमुक्ताश्च क्षौमकोट्यम्बराणि च ।
दासीदाससहस्राणि कोटिशो गास्तथैव च ॥ ३३ ॥



हंसेन्दुशुक्लवर्णानां हयानामयुतं ददौ ।
तुङ्गानां नित्यमत्तानां गजानामधिकं शतात् ॥ ३४ ॥

अन्तःपुरचरा नारीर्नृत्तगीतविशारदाः । ददौ चतुःसहस्राणि श्रीनिवासाय विष्णवे

दत्त्वा चैतानि सर्वाणि तस्थौ देवपुरो विभुः ॥ ३५ ॥
दृष्ट्वा देवोऽपि तत्सर्वं देवीभ्यां सहितो हरिः ॥ ३६ ॥

सुप्रीतः प्राह राजानं श्वशुरं वेङ्कटेश्वरः । वरं वृणीष्व हे राजन्गुरो मत्तो यदीच्छसि

इति श्रीशवचः श्रुत्वा वियद्राजोऽवदद्विभुम् ।
त्वत्सेवैवेह देवेवं भूयादव्यभिचारिणी ॥ ३८ ॥
मनस्त्वत्पादकमले त्वयि भक्तिर्ममाऽस्तु वै ॥ ३९ ॥

श्रीभगवानुवाच

त्वया यदुक्तं राजेन्द्र ! सर्वमेतद्भविष्यति । इतिदत्त्वावरंतस्मैसम्मान्यैवयथोचितम् ब्रह्मेशादिसुरान्सर्वान्समभ्यर्च्य यथोचितम् । स्वर्लोकगमनायैवमनुमेने मुदा हरिः

गतेषु तेषु सर्वेषु श्रिया भूमिजया युतः ॥ ४१ ॥
विहरन्स यथापूर्वं स्वामिपुष्करिणीतटे ।
आस्ते दिव्यालये देवोऽप्यर्च्यमानो गुहेन वै ॥ ४२ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवेङ्कटाचलमाहात्म्ये धरणीवराहसम्वादे ब्रह्मादिभिः साकं श्रीनिवासस्य वियद्राजपुरगमनकमलालयापरिणयादिवर्णनंनाम [illegible]ऽध्यायः ॥ ८

# नवमोऽध्यायः

## वसुनामकनिषादवृत्तान्तेसुतहननोद्युक्तंतम्प्रतिभगवदुक्तिवर्णनम्

धरण्युवाच

कलौ युगे भूमिधर ! केनत्वंद्रक्ष्यसे प्रिय !। विमानं केन ते देव कार्यतेऽस्मिन्महीधरे

श्रीनिवासोऽपि केनैव द्रक्ष्यते सुभगाकृतिः ।

एतद् ब्रूहि मम प्रीत्या श्रोतुं कौतूहलं विभो !॥ २ ॥

श्रीवराह उवाच

वक्ष्यामि शृणु हे देवि ! भविष्यद्यद्वदामि ते ।

अस्मिन्महीधरे पुण्ये निषादो वसुनामकः ॥ ३ ॥

श्यामाकवनपालोऽभूद्भक्तिमान्पुरुषोत्तमे । श्यामाकतण्डुलान्पक्वान्मधुना परिषिच्य च

निवेद्य देवदेवाय श्रीभूमिसहिताय च । एवं भक्तिमतस्तस्य भार्या चित्रवती शुभा

असूत तनयं बाला वीरनामानमुत्तमम् । वसुः पुत्रेण सहितो भार्यया पतिभक्तया

कस्मिंश्चिद्दिवसे पुत्रं श्यामाकं पालयेति च ।

विसृज्य पत्न्या सहितो मध्वन्वेषणतत्परः ॥ ७ ॥

गतो वनान्तरंशीघ्रं मधुच्छत्रदिदृक्षया । बालःश्यामाकपक्वानिगृहीत्वाऽग्नौनिधायच

पिष्ट्वा निवेदयामास वृक्षमूले श्रियः पतेः । नैवेद्यं भक्षयित्वैव वीरस्त्वास सुखेन वै

तदन्तरेवसुश्चापि मध्वादाय समागतः । श्यामाकान्भक्षितान्दृष्ट्वाऽन्तर्ज्यसुतमात्मनः

खड्गमादाय तं हन्तुं त्वरया हस्तमुद्दधौ ॥ ११ ॥

तद्वृक्षस्थस्तदा विष्णुः खड्गं जग्राह पाणिना ।

खड्गो गृहीतः केनेति पश्यन्वृक्षं ददर्श सः ॥ १२ ॥

शङ्खचक्रगदापाणिं वृक्षारूढार्धविग्रहम् । मुक्त्वा वसुश्च तं खड्गं प्रणम्योवाच केशवम्

किमिदं देवदेवेश ! चेष्टितं क्रियते त्वया ॥ १४ ॥



श्रीभगवानुवाच

वसोशृणुवचोमेत्वंपुत्रस्तेभक्तिमान्मयि । त्वत्तोऽपिमेप्रियतमस्तस्मात्प्रत्यक्षमागतः

अस्य सर्वत्रतिष्ठामि तव स्वामिसरस्तटे । इति देववचः श्रुत्वा प्रीतिमानभवद्वसुः

एतस्मिन्नेव काले तु पाण्ड्यदेशात्समागतः ।

बाल्यात्प्रभृति शूद्रोऽपि विष्णुभक्तिसमन्वितः ॥ १७ ॥

नारायणपुरीं प्राप्य श्रीवराहम्प्रणम्य च । तत्र श्रुत्वाश्रीनिवासंवेङ्कटाद्रिनिवासिनम्

स्वयम्भुवं देवदेवसेवितं प्रययौ ततः । सुवर्णमुखरीं प्राप्य स्नात्वा चोत्तीर्य तत्तटे

कमलाख्ये सरसि च स्नात्वा पुण्यप्रदायिनि । तत्तीरवासिनंदेवंकृष्णंरामेणसंयुतम्

नमस्कृत्य ततः प्रायाद्वनंगजवटायुतम् । शनैः सम्प्राप्य शेषाद्रिंनिर्झरं सन्ददर्श ह

तत्समीपं समासाद्य कपिलापूजितं शिवम् ।

तत्पुरश्चक्रतीर्थं तदगाधम्पापनाशनम् ॥ २२ ॥

तत्र स्नात्वा ततोऽगच्छद्वेङ्कटाद्रिं शनैःशनैः । आराद्वधुंगच्छतामार्गयुक्तोवैखानसेनच

रङ्गदासस्त्वारुरोह बालो द्वादशवार्षिकः ।

स्वामिपुष्करिणीम्प्राप्य स्नात्वा भक्तिसमन्वितः ॥ २४ ॥

वैखानसेन मुनिना गोपीनाथेन पूजितम् । वनमध्ये तरोर्मूले स्वामिपुष्करिणीतटे ॥

तिष्ठन्तंपुण्डरीकाक्षंश्रीभूमिसहितंहरिम् । आकाशस्थं सन्ददर्श पीननीलाकृतिशुभम्

पार्श्वस्थशङ्खचक्राभ्यां गदासिभ्यां निषेवितम् ।

पक्षौ विस्तार्य चाऽऽकाशे देवमूर्ध्नि वितानवत् ॥ २७ ॥

स्थितश्च गरुडेशानम्पश्चाच्छार्ङ्गं शरस्तथा ॥ २८ ॥

एवंदृष्ट्वाश्रीनिवासंविस्मितोरङ्गदासकः । अस्यदेवस्यचारामं करिष्यामीत्यचिन्तयत्

निश्चित्य मनसा सर्वं तरुमूलेऽवसत्सुधीः । कृत्वावैखानसाद्विष्णोर्नैवेद्यञ्च दिनेदिने

शनैश्छित्त्वा वनं घोरं वृक्षांश्चिच्छेद पार्श्वगान् ।

आस्थानचिञ्चां देवस्य रमायाश्चम्पकं तरुम् ॥ ३१ ॥

देवाज्ञया वर्जयित्वा तावुभौ देवसेवितौ । देवस्यपरितोभूमौशिलाकुड्यन्तदाकरोत्

